## अथचैत्रादिमासेषु मन्वादितिथयः

| चैत्र शुक्ल | ज्येष्ठ शुक्ल | आषाढ शुक्ल | भाद्र शुक्ल | आश्विन शुक्ल | कार्तिक शुक्ल | पौष शुक्ल | माघ शुक्ल | फाल्गुन शुक्ल | श्रावण कृष्ण |
|---|---|---|---|---|---|---|---|---|---|
| ३।१५ | १५ | १०।१५ | ३ | ९ | १२।१५ | ११ | ७ | १५ | ८।३० |

### अथ युगादितिथयः

| कार्तिकशुक्ल | वैशाखशुक्ल | माघकृष्ण | भाद्रकृष्ण |
|---|---|---|---|
| ९ | ३ | ३० | १३ |
| सतयुगादिः | त्रेतायुगादिः | द्वापरयुगादिः | कलियुगादिः |

☞ अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु।

### सामान्यसुभिक्षादिकम्

प्रभवात् द्विगुणं कृत्वा त्रिभिर्न्यूनञ्च कारयेत्। सप्तभिस्तु हरेद्भागं शेषे ज्ञेयं शुभाशुभम्। एकं चातुरिदुर्भिक्षं पञ्च द्वाभ्यां सुभिक्षकम्। त्रिषष्टे च समं ज्ञेयं शून्ये पीडा न संशयः।

कल्पादि- चैत्रशुक्ल१, वैशाखशुक्ल ३, कार्तिकशुक्ल ७, मार्गशीर्षशुक्ल ९, माघशुक्ल १३, चैत्रकृष्ण ३।

दशावताराः- मत्स्यः चैत्रशुक्ल ३ (अपराह्ने), रामः चैत्रशुक्ल ९ (मध्याह्ने), परशुरामः वैशाखशुक्ल ३ (प्रदोषे), नृसिंहः वैशाखशुक्ल १४ (सायाह्ने), कूर्मः वैशाखशुक्ल १५ (मध्याह्ने), कल्किः श्रावणशुक्ल ६ (सायाह्ने), कृष्णः भाद्रपदकृष्ण ८ (निशीथे), वामनः भाद्रपदशुक्ल १२ (मध्याह्ने), बौद्धः आश्विनशुक्ल १०(सायाह्ने), वाराहः भाद्रपदशुक्ल ३ (अपराह्ने)।

### वर्ष-शुभाशुभज्ञानम्

तिथिवारर्क्षयोगानां युतिः संवत्सरान्विता। प्रष्टुर्नामाक्षरैर्युक्ता त्रिहते शेषके फलम्। एकेन क्लेशं समतादाप्यां च त्रितये सुखम्।

### अथ चरणी विवेकः

स्वामि हस्तप्रमाणेन दीर्घविस्तारसंयुतम्। अष्टभिश्च हरेद्भागं शेषं चरणिरुच्यते।। पशुहानिः पशोरोगः पशुलाभः पशुक्षयः। पशुनाशः पशोवृद्धिः पशुभेदः बहुः पशुः।।

### अथ जन्मकुण्डलीतः प्रतिवर्षप्रिप्रतिभावविचारः।

जन्माङ्गं प्रथमं विद्धि द्वितीयञ्च द्वितीयकम्। एवं द्वादशभावाः स्युर्द्वादशाब्दस्य सूचकाः।। द्विरावृत्या लग्नभावात् त्रयोदश पुरस्सराः। त्रिरावृत्तेस्तु पट्त्रिंशद्वर्षाणिस्युरिहायुषाम्। आवृत्तिभिस्तु दशभिः पूर्णता पुरुयायुषः।।

वर्षसंज्ञकभावास्युर्यदिकोणेषु। १।५।९ सद्ग्रहाः। दैहिकं सकलं सौख्यं वर्षेस्मिन्नियतं शुभम्। तद्वर्षमासलग्नात्युस्तथा-भावाः धनादयः। तत्तद्भावकोणस्था यदि सर्वेशुभग्रहाः तद्वर्षे तस्य भावस्य विशेषात्सुखकारकः। एवं पापग्रहास्तेषु कोणेषु यदि संस्थिताः। सबला भावनाशाय निर्बलास्तु सुखाय च। शुभैस्तु शुभताधिक्यं पापैस्तुभावसंक्षयः। मिश्रे मिश्रफलं ज्ञेयं बलाबलविशेषतः इति।

## अथ जन्मलग्नस्य निश्चयो जन्मपाङ्गात्प्रसवसामयिककेषाञ्चित्पदार्थानां ज्ञानमाह।।

### अथ मातृवस्त्रभोजनयोर्ज्ञानमत्राह

मातृवस्त्रं वदेत्तत्र या विलग्ने नवांशपात्।। तुर्यांशव- शतोवाच्यं सूतेः प्राक् मातृभोजनम्।।१।। कठिनं मधुरं रूक्षं लेह्यपेयादिकं मृदुः।। चोप्यान्नगुडं दुग्धं विचित्रं स्वल्पभोजनम्।। वटकाद्यं वहुरसं पेयादि मधुरं हितम्।। क्रोधादिना कदन्नं स्यात्सूर्यादिः श्लोकपादतः।।३।। इति।।

### अथार्कलग्नद्वादशांशवशेन दीपज्ञानम्।

तदाहगर्गः- लग्नस्य प्रकृते भावे सूर्ये प्राच्या प्रदीपकः। द्वितीये च तृतीये च भवेदीशानकोणगः।। चतुर्थे चोत्तरे वायौ कोणे पञ्चमषष्ठये। सप्तमे पश्चिमायाञ्च नैरृत्यां नवमेऽष्टमे। दशमे दक्षिणस्यामाग्नेयकोणे च दीपकः। द्वादशैकादशे प्रेक्तोदीपाभावः स्वयम्भुवा। अन्यत्र तत्रैव चरे लग्ने चरे दीपः स्थिरे तत्रैव संस्थितः। द्विस्वभावे तथा लग्ने करेण परिचालितः। त्रेष्काणे प्रथमे चन्द्रे दीपः पूर्णो द्वितीयके। अर्धपूर्णो हि तैलेन हीनतैलस्तृतीयके। चद्धर्वांगोदिदिशीभास्करांपत्र तत्रवाच्योदीपः।। इति।।

### अथार्कस्यराशिवशेन दीपस्य दिग् ज्ञान चक्रम्

| मेषवृषवर्के | मिथुनेऽर्के | कर्केसिंहे | कन्यायांरवौत्य |
|---|---|---|---|
| प्राच्यांदीपः | आग्नेयां | दक्षिणेदीपः | नैऋत्यकोणे |
| तुलावृश्चिके | धनुर्धरे | मृगे कुम्भे | मीने रवौ |
| पश्चिमायां | वायव्यकोणे | उत्तरेदीपः | पृथिव्याम् |

### अथगृहमध्ये जन्माङ्गात्सूतिकागृहज्ञानमाह।

मेषकुलीरतुलालिघटैः प्रागुत्तरतोगुरुसौम्यगृहेषु। पश्चिमतश्च वृषेणनिवासो दक्षिणभागकरौ मृगसिंहौ।। अथमातृकष्टतत्कालयोर्ज्ञानमाह।। क्लेशोभानुः स्फूर्यस्यसत्तगतैः शशाङ्कयुतैर्वा। पापैर्भवत्सस्मरसुख-गतैः क्लेशमाहुर्जनन्याः।। पापमिश्रितयुक्तैर्घटमुदृते: स्याद दृष्टिपातोऽथयुते तु पापैः। मूर्ते ७ चतुर्थ ४ प्रविचार्यसम्यग्वाच्याविधीद्रा जनने जनन्याः।। इति।।

### अथ ग्रहाणामधिप्रत्यधिदेवताज्ञानमाह

ईश्वरस्तु उमा चैव स्कन्दो विष्णुस्तथैव च।। ब्रह्मणेन्द्र यमश्चैव कालश्चैव तथाष्टमम्। चित्रगुप्तस्तु नवमं अधिदैवत कीर्तिताः। अग्निश्चैव तथा आपः पृथिवी विष्णुरेव च। इन्द्रश्चैव तथेन्द्राणि तथैव च प्रजापतिः। सर्पश्चैव तु ब्रह्मा च एताः प्रत्ययधिदेवताः।।

### तत्रादौ प्रसवस्य प्रकारज्ञानमाह

शीर्षोदयेविलग्नेमूर्ध्नाप्रसवो पृष्ठोदये चरणतः। उभयोदये च हस्ततः शुभदृष्टः शोभनोन्यथाकष्टः।।१।। अग्निभ्यां शिरसाप्रसवोजेयः समयः स्वम्प्दर्शनात्। अग्निभ्यां प्रसवःकालो जङ्घसंदर्शनाद्भवेत्।। कराभ्यां प्रसवः।

फलेमणिवन्धस्य दर्शनात् मणित्यः। लग्नाधिपेऽ- शकपतौ लग्नस्थे वक्रितं गृहे चापि। विपरीत गतौ मोक्षो वाच्योगर्भस्य संक्लेशतः।। इति।।

### अन्तरिक्षजन्मज्ञानम्

धनुर्मीनेचकन्यायां मिथुने च विशेषतः। अन्तरिक्षे भवेज्जन्म शेषे भूमौ विनिर्दिशेत्। अन्तरिक्षं नामोच्च भूमेरिति।।

### अथ जन्माङ्गाद्वालकस्य रोदनमाह

मेषेत्र १।३। पञ्चानन ५ चाप ९ लग्ने विस्मृतय सर्व बहुरोदतिस्म। अल्पवटे ११ स्त्री ६ वणिजे ७ परेषु ४।८।१०।१२ रुदान्वितो ज्ञानबलस्य सत्वात्। इदं लग्नचन्द्रयोर्मध्ये यो वली तस्मात् रोदनस्य ज्ञानं कार्यम् ।।

### अथ जन्माङ्गाद्वावालकस्यमस्तकज्ञानमाह

मेषे चापमृगेन्द्रयोर्यदिशिशुः प्राचीशिरो जायते। गोकन्यामकरेषु दक्षिणशिरा जातोभवेन्निश्चितम्।। नीने वृश्चिककर्किणो यदि तदाकौवेरमूर्द्धा भवेत् कुम्भेयुग्मघटेतनौयदि तदापाश्चात्यमूर्द्धा भवेदिति।।

### अथसूतिकायाः वस्त्रचूड़िकावर्णयोर्ज्ञानं

अरुणधवलचारी पाटलोतोयदाभंरजधवलयुक्त श्चित्रवर्णोऽथकृष्णः। कनकरजिनवर्णोकर्वुरो वस्त्र स्वच्छः क्रियतङहसुवाच्यं चाम्बरं सूतिकायाः ।।१।। यावत्संख्याग्रहाणाञ्च चतुर्थे दशमे गृहे। दृष्टिः स्यात्तावतास्रेया चूड़िकावर्णमादिशेत् ।।२।। इति।।

| अथाधानकाले चन्द्रवशात्प्रसवस्य समयज्ञानायचक्रम्।। | | | | | अथ प्रश्नकालदाधानतो वा प्रसवकालिक चन्द्रविज्ञानमत्राह।। |
|---|---|---|---|---|---|
| चन्द्रराशयः | | | | दिनानि | गर्गः। यावत्संख्याद्वादशांशेशीतरश्मिर्व्यवस्थितः। तत्संख्यावातता राशिर्जन्मेन्दोस्तद्गते भवेत्।। |
| १ | ४ | ७ | १० | २७१ | |
| २ | ५ | ८ | ११ | २९७ | |
| ३ | ६ | ९ | १२ | २८१ वा दिन २७६ | |

### सारावल्यां

यस्मिन् द्वादशभागे गर्भाधाने व्यवस्थितश्चन्द्रः। तत्तुल्यर्क्षे प्रसवो गर्भस्य नियतमादिशेत्प्राज्ञः।२। समुद्रजातकेऽपि। यतमे द्वादशभागेसूतिकास्तत्संख्यके विधावित्ति। अत्रलग्नचन्द्रयोर्मध्ये यो बलवान् तस्य द्वादशांशकवशेन चन्द्रराशिज्ञेयः इत्युक्तं लघुजातके लग्नेर्द्वयोर्बलवान् तस्यद्विरसांशकान्विते विधौ प्रसवः।। अथकाल ज्ञानम्। तत्काले दिवसनिशासंज्ञोसमुदेति राशिभागोयः। यावानुदयस्तावान् वाच्योदिवसस्य रात्रेर्वा।।

### अथात्रसूतिकातत्त्वं सूत्रबद्धं जातकतत्वोक्तमाह

चन्द्रेणादृष्टेऽङ्गे पितुः परोक्षेजन्म।१। स्थिरेर्केऽष्टमाङ्कायान्त्ये चन्द्रेणचादृष्टेऽङ्गे स्वदेशस्थ पितुः परोक्षेजन्म।२। चरेऽर्के तु प्राग्वज्जातस्य पितरि विदेश गते जन्म।३। मन्देऽङ्गवास्तेभौमेपितुः परोक्षं जन्म।४। ज्ञाघ्यान्तरे चन्द्रेऽिम।५। सूर्यात् त्रिकोणास्तगे मन्दारौपापभगोजन्म निपितावद्धः।६। मातापितग्रहयोर्बलीतत्सम्बन्धि गृहे जन्म।७। सवलेर्के-भौमदृष्टेवहु दीप गृहेजन्म।८। सन्द्रातैलज्ञानम्।९। लग्नाद्दीपवर्तिज्ञानम् ।१०। चरेऽर्कचरःस्थिरेऽर्केस्थिरा द्विस्वभावेखण्डवद्दीपः।११। शीर्षोदयांशेऽङ्गेमूर्द्धतः प्रसव उभयोदयांशे हस्ततोऽन्यथात्र पादतः।१२। जन्मलग्नचन्द्रादन्यतमेपुबन्धवस्तागेपुक्रूरेपुमातुः कष्टम्।१३। केन्द्रगस्य बलिनोग्रहस्यदिशिगृह द्वारम् ।१४। काष्टाढ्यं नवंदग्धंचित्रंदृढं रम्यंजीर्णं क्रमादर्कादिपुर्योबली तदनुसारि गृहम् ।१५। वृषाजयारुदयेगृहस्यापूर्वभागेयुग्मस्याग्नेय्यां कर्कसिंहयोर्याम्येकन्याया नैरृत्ये तुला वृश्चिकयोः पश्चिमे धनुषिवायौ मन्दभयोरुत्तरे झषस्ये शान्त्यांजन्म।१६। एवं शैय्या ज्ञानम् ।१७। लग्नदिशि शैय्याशिरस्त्रिषड्ङ्कास्येपुपादाः।१८। यत्र पापस्तत्रोद्घातः।१९। लग्नचन्द्रान्तरग ग्रहसंख्या उपसूतिकाउदगर्द्धेभ्यन्तर गोदक्षिणार्द्धे बाह्याः।२०। वक्रोच्चसंस्थे त्रिगुणाः स्वर्क्षत्र्यंशनवांशेस्थितेद्विगंणानोचास्तागस्तदर्धमिता उपसूतिका।२१। गोजाश्वियुग्म सिंहाङ्गेवहुरूदितो जातोऽन्यभागे। अङ्ग चन्द्रग्रह मात्रादृष्टेनिर्जनप्रसवः।२२। स्वाम्बुगेषु शुभेषु सुखेन प्रसवः त्रिकोणास्तगेषुपापेषु कष्टतः।२३। तुर्यवाखे मन्दारार्कयोगे जन्मतः प्राक्पितृ मरणम् ।२४।

अनिष्टभेपुरोगोत्पत्तौशान्तिः। ऋक्षेशरूपं केनकेन कृत्वा तल्लिङ्गमंत्रैश्चसुगन्धित पुष्पैः। पुष्पाक्षतैर्गुग्गुलधूपदीपैर्नैवेद्यताम्बूल फलैश्चसम्यक्।१। पूजांचकृत्वाभयनाशनाय विप्रायदद्यादतुलं शिवाय।२।

रोगविमुक्तस्यस्नानमुहूर्तविचारः। रे. पुन. कृ. उ३. स्वा. रो. श्ले. मघा एभ्यो विना रिक्तातिथौ ४।९।१४ चन्द्रशुद्धि रहितम् चं. शु. भिन्नवारेचोत्तमः। चर लग्ने। लग्नात् १।४।७।५।९।१०।११ शुभैः।

अथरोगोत्पत्तौ विशेषाः- आर्द्रा श्ले. ज्ये. श. भ. पू३. वि. ध. कृ. नक्षत्राणि सू. मं. श. वासराः ४।९।१२ ।६।१४ तिथयः एतेषां त्रयाणां योगे रोगोत्पत्तौ मृत्युः। भ.ऽश्ले. मृ. म. वि. कृ. आर्द्रा एषुभेषुसर्पदर्शने मृत्युः।

उत्पन्नरोगे शुभाशुभविचारः। स्वात्यश्लेषारौद्रपूर्वात्रयेषु शाके भौमे सूर्यजे सूर्यवारे। नन्दा रिक्तास्वेव रोगस्य चाप्तिर्मृत्युर्ज्ञेयः शङ्करो रक्षिताऽपि।

अथ कर्णमर्दनमुहूर्त्तस्यविचारः। अनु.श्र.मू.रे.पू. फा.ज्ये.रो.म. एषु भेषु सत्तिथौ सद्वारे शुभाङ्गेचोत्तमः।

वाणिज्य- (दुकान) कर्ममुहूर्त विचारः। अनुराधोत्तरापुष्यं रेवतीरोहिणी मृगः। हस्तचित्राश्विने कुर्याद्वाणिजयं दिवसे शुभः।।

अथ धान्यसंग्रहमुहूर्त्तस्यात्रविचारः। रो. मु३. स्वा. मू. रे. मृ. ह. अश्वि. ध. श्र. अनु. पुन. चि. पुष्य. श. एषु भेषु।। वृ. बु. चं. शु. वारेषु रिक्तारहिते तिथौ स्थिरलग्नेषु सद्ग्रहे चोत्तमः।। वारप्रवृत्तिविज्ञानं क्षणवारार्थमेवहि। अखिलेष्वपि कार्येषु दिनादिरुदयाद्रवेः।।

अथकोष्ठादौ धान्यस्थापनमुहूर्त्तः। मृ. पु. रे. अनु. श्र. ध. श. अश्वि. पुष्य. रो. उ३. एषु भेषु सत्तिथौ सू. चं. वृ. शु. वारेषु।। निष्कासनं धान्यानाम्।। उ३. रो. ध. श. एषु भेषु सद्वारे शुभांगे सत्तिथौचप्रशस्तः।।

अथ धान्यनयनस्यफल पुष्योत्तारणास्यचात्र मुहूर्त्त विचारः। ह. चि. स्व. उ३. ध. रो. मू. पु. अश्वि. अनु. म. एषु भेषु।। शनि भौमवासरहिते सत्तिथौशुभोदये चोत्तमः।

वृक्षलतागुल्मरोपणस्य मुहूर्त्तः। लतागुल्मवृक्षरोपेहस्त पुष्याश्विनी ध्रुवैः। विशाखामृदु मूलाश्विवारूणश्च प्रशस्यते।१। गुरौ केन्द्रे विपापे खे विधौ वारिविधूदये। शुभयुक्ते क्षिते वंधौ सद्वारे वा शुभोदये॥

अथवृक्षरोपणस्यमंत्रमप्याह। ओ वसुधेति व शीतेतिपुण्यदेति धरेति च।। नमस्ते शुभगे दैविद्रुमोऽयं त्वयि रोप्यते।।

वाहनारोहणमुहूर्त्तः। पौष्णाश्विनीवरुणमारुत शीतरश्मिचित्रादितिश्रवणपाणिसुरैज्यवित्तैः। वारेषु जीवशशिसूर्यसितेन्दुजानामारोहणं गजतुङ्गरथेषु (व्यहवारोच्चय) प्रशस्तम् ।।

शस्त्रकर्मः। तद्द्यादिह विधुवेंदुतनयप्रद्योतने रोगिणेऽसृक्स्रावव्रणकर्म सूर्यकुजयोरह्नीहकेन्द्र स्थयोः।

तैलाभ्यङ्गेवर्ज्योऽथ बालस्यादौ दुग्धपान समयश्च तदत्राह। रवौ भौमे व्यतिपात संक्रांतौ वैधृतावपि। षष्ठ्यामष्टम्यां च विष्टयांचतैलाभ्यङ्गो न पर्वसु।।१।।

अथत्रतैलाभ्यङ्ग दोषापवादमाह। तैलाभ्यङ्गः न दोषाय प्रत्यहंक्रियते चयः। उत्सवे वातरोगे वा यत्र वाचनिकोपिवा।१। मंत्रितं क्वथितं तैलं सार्षपं पुष्पवासितम्। द्रव्यांतरयुतंवापिनैव दुष्येत्कादचन।।

| | नैसर्गिकचक्रम् १ | | | चलचक्रम् २ | | | योगचक्रम् ३ | | |
|---|---|---|---|---|---|---|---|---|---|
| जन्म | ६ | ४ | ३ | ६ | ४ | ३ | ३ | ० | ० |
| कर्म | २ | ० | ० | ६ | ४ | ३ | ५ | ४ | ० |
| आधान | ५ | ० | ० | २ | ० | ० | ४ | ० | ० |
| पिण्ड | ६ | ४ | ३ | ५ | ० | ० | २ | ० | १ |
| छिद्र | ६ | ४ | ३ | ६ | ४ | ३ | ३ | ० | ० |

चलचक्रसाधनार्थमत्रछिद्र नाम्निपञ्चमस्वरस्यागत्वात्रैसर्गिकचक्रं पञ्चमस्वर संबन्धीयं तत्कोष्ठकं तदेव जन्मकोष्ठकं प्रकल्पयेत् तदितराणां यथाक्रमं स्थापनम्।।

### अथवारपरत्वेनतैलाभ्यङ्गफलं विधिश्च

| सूर्य | चन्द्र | मङ्गल | बुध | गुरु | शुक्र | शनि | वाराः |
|---|---|---|---|---|---|---|---|
| ताप | सुकान्ति | मृतिः | धनप्राप्ति | वृत्तिहानिः | विपत्तिहानिः | सुखम् | फलम् |
| पुष्प | ० | मृत् | ० | दूर्वा | गोमय | ० | पातन |

### अथ पञ्चस्वरातः शून्यानयनोदाहरणं विलिख्यते तत्र श्लोकाः

| जन्म | कर्म | आधा | पिण्ड | छिद्र |
|---|---|---|---|---|
| उदित | भौम | भ्रात | सध्वा | अस्त |
| ८१ | ८७ | ९३ | ९९ | १०५ |
| अ | इ | उ | ए | ओ |
| आ | ई | ऊ | ऐ | औ |
| क | ख | ग | घ | च |
| छ | ज | झ | ट | ठ |
| ड | ढ | त | थ | द |
| ध | न | प | फ | ब |
| भ | म | य | र | ल |
| व | श | ष | स | ह |
| नामाद्याक्षर | नामाद्याक्षर | नामाद्याक्षर | नामाद्याक्षर | नामाद्याक्षर |

वयो राशिस्वराङ्काश्च एकीकृत्यत्रिधा न्यसेत्। द्विचतुस्त्रिहतंकार्यं सप्ताष्टरसभाजितम्। आधानेनवदेयानि स्वरेकर्मणिपञ्च च सर्वाङ्कव्यापितः पिण्डश्छिद्रे श्रेणी व्यस्थितः २ एतेगणितोपयोगिकाः। केचित्ग्रंथान्तरीया अपि श्लोकाः। तिथिराशिवयोङ्कश्च प्रथमे जन्मकोष्ठके। द्विचतुस्त्रिगुणितं सप्ताष्टरसभाजितम् १ कर्मकोष्ठे पंचदत्वाआधानेनवकन्तथा। पूर्ववद्गुणनं कार्यंभजनश्चापि पूर्ववत् २ पिण्डे चतुर्दशंदत्वाछिद्रेऽष्टाविंशतिः सुधीः। द्विचतुस्त्रिभिर्गुणितं सप्ताष्टरस भाजितम् ३ एवं नैसर्गिकंज्ञेयं चलचक्रं स्वराल्लिखेत्। यत्र कोष्टस्ववर्णोवै तदेव जन्मसंज्ञकम्। कर्माधानादिकान्सर्वान् विदित्वा सन्नियोजयेत्५ जन्मनाजन्मभं योजयं कर्मणा कर्मसंज्ञकम्। आधाना दित्रिकेप्येवं योज्याऽत्र ध्रुवकान्क्षिपेत् ६ तैरेवगुणकैर्गुण्यं भजनञ्च तथा विधिम्। स्पष्टार्थः।। उदाहरणम्।। गतवर्षाणि ३३ जन्मराशिः ६ नामादिमोदवर्णः (ठ) अस्यस्वराङ्का १०५ वृषादिगणनया राशिः ५ वयोराशिस्वराङ्कानामैक्यं पिण्डम् १४३ त्रिपुस्थानेपुसंस्थाप्यक्रमात् २।४।३ गुणितं २८६।५७२।४२९ यथाक्रमं ७।८।६ विभक्तं शेषाणि ६।४।३ एते नैसर्गिकजन्मकोष्ठकेऽधोऽधः स्थाप्याः। कर्मस्वरसाधनार्थं पिण्डे ५ युक्तं १४८ इदं पूर्वगुणकेन यथाक्रमं गुणितं २९६।५९२।४४४ पूर्वछेदहृते शेषाणि २।०।० नैसर्गिक कर्मस्वराङ्ककोष्ठे स्थापनीयाः। पुनराधान स्वराङ्का। पिण्डेनवयुते १५२ गुणगुणे छेदहृतेच ५।०।० ध्रुवाङ्कानां योग १४ मितेयुक्ते १५६ पूर्ववत्तैरंवगुणकैर्गुणिते छेदैर्विभक्तेऽशेषाणि ६।४।३ पुनश्छिद्रस्वरसाधनार्थपिण्डे २८ संयोज्य गुणकैः सुगुण्यछेदैर्विभज्य शेषाणि ६।४।३ पूर्ववन्नैसर्गिककोष्ठके यथोक्तवत्स्थापिते निष्पन्नं नैसर्गिककोष्ठकम्।। अतश्चलचक्रंविधाय ततोयोगजफलं कृत्वा यदुत्पद्यते तदेव वर्षफलस्वरूपम्। नैसर्गिकादिचक्रसाधनेऽन्यान्यपि प्रकाराणि सन्ति किन्त्वत्रैव वहुसम्मतेरस्माभिरपि दर्शितम्। अथयोगचक्रं साध्यते। तत्रोभयजन्म कोष्ठस्थाङ्कयुतिः १२।८।६ ध्रुवाच्छून्यध्रुवंसयोज्य २।४।३ गुणितं २४।३२ १८ स्वच्छेदैः ७।८।६ यथा क्रमंविभक्तम् ३।०।० जातंयोगचक्रस्यजन्मकोष्ठे प्रथममङ्कत्रयम्।। कर्मस्वर साधने चोभयकर्मकोष्ठाङ्कायोगः ८।४।३ पञ्चध्रुवतैर्युक्ते १३।९।८ गुणगुणंछेदहृतं ५।४।० योगकर्म कोष्ठकेस्थाप्यम्। आधानयोर्योगे ९ ध्रुवयुतेयथोक्तकृते ४।०।० जातं पिण्ड स्वरसाधनेध्रुवः १४ अथोक्तवत् कृते २।०।१ जातम्।

### वाटिकाचक्रंशक्तियामलोक्तम्।

वृक्षं चक्रं कल्पयित्वा चक्रमेव विन्यसेत्पुनः सूर्यभाद्दिनभं यावद्वृक्षचक्रं विधीयते। मूले त्रयं रोगकरं त्वचि त्रीणि धनागमः। शाखासु वेदनाशः स्यात पत्रे युग्मं दरिद्रता। शीर्षत्रीणि शुभं प्रोक्त पूर्वे चैकस्तु मृत्युदः। याम्ये पञ्चात्मकोऽपायः पश्चिमे द्वौ धनागमः। उत्तरे वेदलाभायेति।

### अथ शकोपरिअनुमानादनेकपदार्थानांचैत्रादि प्रत्येकमासेषु समर्घमहर्घादिज्ञानार्थमत्रध्रुवांकाः।।

| सं | मासा | चै | वै | ज्ये | आ | श्रा | भा | आ | का | मा | पौ | मा | फा |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | यव | ० | २ | १ | ० | २ | २ | १ | २ | ० | २ | १ | ० |
| २ | चना | ० | २ | १ | ० | २ | २ | १ | २ | ० | २ | १ | ० |
| ३ | गोधूम | ० | २ | १ | ० | २ | २ | १ | २ | ० | ३ | १ | ० |
| ४ | धान | ० | २ | १ | ० | २ | २ | १ | २ | ० | २ | १ | ० |
| ५ | तिल | ० | २ | १ | ० | २ | २ | १ | २ | ० | २ | १ | ० |
| ६ | खांड | ० | २ | १ | ० | २ | २ | २ | २ | ० | २ | १ | ० |
| ७ | गुड़ | ० | २ | १ | ० | २ | २ | १ | २ | ० | २ | १ | ० |
| ८ | घृत | १ | ० | २ | १ | ० | २ | २ | ० | १ | ० | २ | १ |
| ९ | लवंग | १ | ० | २ | १ | ३ | २ | २ | ० | १ | १ | २ | १ |
| १० | शहद | २ | १ | ० | २ | २ | २ | ० | १ | २ | १ | ० | २ |
| ११ | अरहर | ० | २ | १ | ० | २ | २ | १ | २ | ० | २ | १ | ० |
| १२ | मूंग | २ | १ | ० | २ | १ | १ | ० | १ | २ | १ | ० | २ |
| १३ | कपास | १ | ० | २ | १ | ० | ० | २ | ० | १ | ० | २ | १ |
| १४ | रेंड़ी | १ | ० | २ | १ | ० | ० | २ | ० | १ | ० | २ | १ |
| १५ | सूत | २ | १ | ० | २ | १ | १ | ० | १ | २ | १ | ० | २ |
| १६ | वस्त्र | २ | १ | ० | २ | १ | १ | ० | १ | २ | १ | ० | २ |
| १७ | कम्बल | ० | २ | १ | ० | २ | २ | १ | २ | ० | २ | १ | ० |
| १८ | पाट | ० | २ | १ | ० | २ | २ | १ | २ | ० | २ | १ | ० |
| १९ | सुपारी | १ | ० | २ | १ | ० | ० | २ | ० | १ | ० | २ | ० |
| २० | अलसी | ० | २ | १ | ० | २ | २ | १ | २ | १ | २ | १ | ० |
| २१ | तैल | २ | १ | ० | २ | १ | १ | ० | १ | २ | १ | ० | २ |
| २२ | फिटकरी | ० | २ | १ | ० | ० | ० | १ | २ | ० | २ | १ | २ |
| २३ | हींग | २ | १ | ० | २ | १ | १ | ० | १ | २ | १ | ० | २ |
| २४ | हरदी | २ | १ | ० | २ | १ | १ | ० | १ | २ | १ | ० | २ |
| २५ | लौंग | ० | २ | १ | ० | १ | २ | १ | २ | ० | २ | १ | ० |
| २६ | जीरा | २ | १ | ० | २ | १ | १ | ० | १ | २ | १ | ० | २ |
| २७ | अजवाइन | १ | ० | २ | १ | १ | १ | २ | ० | १ | ० | २ | २ |
| २८ | कपूर | २ | १ | ० | २ | १ | १ | ० | १ | २ | १ | ० | २ |
| २९ | ककुनी | ० | २ | १ | ० | २ | २ | २ | २ | ० | १ | १ | ० |
| ३० | धनिया | १ | १ | २ | १ | ० | ० | १ | ० | १ | ० | २ | १ |

शाकःखगाब्धिभूपोनः १६४९ शालिवाहनभूपतेः। अनेन युक्तो द्रव्याङ्कश्चैत्रादौ प्रतिमासके।१। रुद्रनेत्र ३ हृतेशेषं फलंचन्द्रेण मध्यमम् । नेत्रेण रसहानिश्चशून्ये वा तत्स्मृतं बुधैः।२। इति।

### अथ चैत्रादि १२ मासानां नामानि

| चैत्र | वैशाख | ज्येष्ठ | आषाढ़ | श्रावण | भाद्रपद | मासाः |
|---|---|---|---|---|---|---|
| वैकुण्ठः | जनार्दनः | उपेन्द्रः | यज्ञपुरुषः | वासुदेवः | त्रिविक्रमः | नामानि |
| आश्विन | कार्तिक | मार्गशीर्ष | पौष | माघ | फाल्गुन | मासाः |
| योगीशः | पुण्डरीकाक्षः | कृष्णः | अनन्तः | अच्युतः | चक्रधरः | नामानि |

### अथङ्गस्फुरणफलानि

| स्थानानि | फलानि |
|---|---|
| मस्तकस्फुरणे | पृथ्वीलाभः |
| ललाटस्फुरणे | स्थानलाभः |
| स्कन्धस्फुरणे | भोगसमृद्धि |
| भ्रुवोर्मध्ये | सुखप्राप्ति |
| भ्रुवोर्युग्मे | महत्सौख्यम् |
| कपालस्फुरणे | शुभावाप्तिः |
| नेत्र २ स्फुरणे | धनाप्तिः |
| नेत्रकोणयोः | लक्ष्मीलाभः |
| नेत्रपक्षस्फुरणे | राज्यलाभः |
| नेत्रपक्ष२स्फुरणे | संग्रामेजयः |
| नेत्रकोपांगदेश२ | कलत्रलाभः |
| नासिका२स्फुरणे | प्रीतिःसुखम् |
| हस्तस्फुरणे | सद्द्रव्यलाभः |
| वक्षःस्फुरणे | विजयध्रुवम् |
| हृदयस्फुरणे | वांछितसिद्धिः |
| कट्यांस्फुरणे | प्रमोदेबलञ्चः |
| कटिपार्श्वे | प्रीतिरनुत्तमाः |
| नाभिस्फुरणे | स्त्रीनाशः |
| आंत्रिकस्फुरणे | कोशवृद्धिः |
| भगस्फुरणे | पतिप्राप्तिः |
| कुक्षिस्फुरणे | सुप्रीतिलाभः |
| उदरस्फुरणे | कोशप्राप्ति |
| लिङ्गस्फुरणे | स्त्रीलाभः |
| गुदस्फुरणे | वाहनप्राप्तिः |
| वृषणस्फुरणे | पुत्रलाभः |
| ओष्ठस्फुरणे | प्रियवस्तुलाभः |
| हनुदेशस्फुरणे | भयं महत् |
| कण्ठस्फुरणे | ऐश्वर्यलाभः |
| ग्रीवार्धस्फुरणे | रिपुभयम् |
| पृष्ठस्फुरणे | युद्धपराजयः |
| कपोलस्फुरणे | वरांगनाप्राप्तिः |
| मुखस्फुरणे | मित्रप्राप्तिः |
| बाह्यस्फुरणे | मधुरभोजनम् |
| बाहुमध्ये | धनागमः |
| वस्तिदेशस्फुरणे | अभ्युदयः |
| उरोस्फुरणे | वस्त्रलाभः |
| जानुस्फुरणे | शत्रुवृद्धि |
| जंघस्फुरणे | स्वामिप्रीतिः |
| पादोपरि | स्थानलाभ |
| पादेतले | नृपत्वम् |
| पादद्वयोस्फुरणे | अलाभम् |

### अथस्त्रीणामाद्यरजोदर्शने श्रेष्टमासपक्षतिथ्यादयः।

| | |
|---|---|
| पक्ष मासः | चोत्तमः। श्वेतवस्त्रे श्रेष्ठोऽयम्। नान्याम्बरे।। |
| तत्र श्रेष्ठः | वैशाखेफाल्गुने मासे मार्गाख्ये श्रावणाश्विने। एषु सितपक्षे |
| तिथयः | १।२।३।५।७।१०।११।१३।१५ एतासुतिथिषु सत्। परन्तु तत्र कृष्णपक्षस्यदशमीयावन्मध्यमम्। तदुपरिकुलटात्वं स्यात्।। |
| वाराः | चन्द्र। बुध। गुरु। शुक्र। एषां वारे प्रशस्तम्।। |
| शुभ नक्षत्राणि | अश्वि. मृग. ध. रे. चि. अनु. ह. श्रव. पुष्य उ३. रो. ऐषु भेषु शुभः।। मृ. पुन. म. वि. कृ. ऐषु मध्यमं परेष्वसत्।। दिवादुर्योगभद्रादिरहिते श्रेष्ठोऽयं न रात्रौ।। |
| शुभ लग्नादि | २।३।४।६।७।९।१२ एतद्रस्याङ्के सद्दिष्टे सत्युत्तमम्। तत्र विवाह वद्ग्रहसंस्थाऽपि विचार्य्या इति। |

### अथरजोदर्शन निषिद्धसमयान्याह

अष्टम्यां द्वादशीषष्ठयोरिक्तादर्शेऽथसंक्रमे।। भद्रानिद्रा व्यतीपाते ग्रहणे सन्ध्ययोः।।१।। परताप गृहे मार्गे कुदेशे कृष्णवाससि।। प्राग्रजोदर्शने नेष्टं शान्त्या तु शुभदं भवेत्।।२।। प्रागुक्तं विलयं यान्ति रजोदर्शनसंभवाः।।३।।

### अथ ऋतुमत्याः स्नानमुहूर्त्तस्य विचारः

ह.स्वा. अश्वि. मृ. अनु. ध. रो. उ३. ज्ये. एषुभेषु। शुभतिथौ। सद्वारे।। सतती स्नायादृतुमतीनारी इति।।

### अथ गर्भाधानमुहूर्त्तस्य विचारः

तत्र विविधं गण्डान्तम्। जन्मतारा।। मू. भ. अश्वि. रे.।। ग्रहणदिनम्।। व्यतिपात वैधृतिश्राद्धदिनम्।। दिवा। परिघाद्यर्द्ध उत्पातहतभम्। जन्मराशितोऽष्टमं। पापग्रहस्थं भवनम्। भद्रा पर्वदिन ४।६।९।१४ तिथिषु सन्ध्यायाम्। सू. मं. श. वासरान्। रजोदर्शनाच्चतुर्थरात्रिपर्यन्तं न शुभः। उ३. मृ. ह. अनु. रो. स्वा. श्र. ध. श. एषु भेषु लग्नात् १।४।५।७।९।१० शुभैः लग्नात् ३।६।११ पापैश्चोत्तमः। सू. मं. दृष्ट लग्ने विषमांशनवांशके चन्द्रे शुभम्।। युग्म (६।८।१०।१२) रात्रौ चोत्तमं गर्भाधानम्। चित्रा पुन. पुष्य अश्विनी एतद्भेषुमध्यमं स्यादिति।।

**अथास्यशान्तिः कल्पोक्ता।।**

पृष्टदूर्वातिलाश्वत्थैरेरगलं जुहुयाद्विधिवत् गोभूदानं च विप्रेभ्यस्तत्रविघ्नौघनाशनम् इति।।

**अथजातकर्मानन्तरं कृत्यम्**

जन्मलग्नं नीरीक्ष्यतत्रस्थग्रह दोषपरिहाराय ग्रहदानं जप वा कुर्यात्। जातमात्रस्य मूलोक्तस्य-मुखमवलोक्यस्नायादिति।।

**अथगर्भाद्यमासानामधिपाः**

| १ | २ | ३ | ४ | ५ | ६ | मासाः |
|---|---|---|---|---|---|---|
| शु. | मं. | गु. | सू. | चं. | श. | पतयः |
| ७ | ८ | | ९ | १० | | मासाः |
| बु. | गर्भलग्नपति | | चं. | सू. | | पतयः |

**अथगर्भसंस्कारेविशेषमाह**

स्त्रीणां विपरीतोर्भलमुक्ति विवाहे गर्भ-संस्कारयोरितकर्मसु भर्तुरैव इति।

षोडशसंस्काराः।। गर्भाधानमतश्च पुंसवनकं सीमन्तजाताभिधे। नामाख्यं सहनिष्क्रमेण च तथाऽन्नप्राशनं कर्म चा। चूड़ाख्यो व्रतबन्धकोऽप्यथ चतुर्वेदव्रतानां पुनः। केशान्तः सविसर्गकः परिणयः स्यात् षोडशीकर्मणाम्। ब्रह्मक्षत्रियविट्शूद्रावर्णास्त्वाद्यास्त्रयोद्विजाः। निषेकादिश्मशानान्तास्तेषां वै मंत्रतः क्रियाः।। शूद्रोऽप्येवंविधः बिना मंत्रेण संस्कृतः। स्त्रीणा चौलान्त संस्कारा प्रकुर्वीतह्यमंत्रकाद्। पुंस्त्रियोरुभयत्रोत्र विवाहः स्यादथाविधिः।।

**अथपुंसवनसीमन्तयोर्मुहूर्त्तः**- तत्र गर्भतो द्वितीये तृतीये वा मासि पुसंवनं कर्मविधेयम् ।। षष्ठे वाष्टमे मासि।। मासधिपतौ सबले सति सीमन्तोन्नयनं प्रशस्तम् ।। नात्र शुक्रेज्ययोमूढत्वदोषः।।

| | |
|---|---|
| सद्वाराः | सू. मं. बृ. एषां वारे मतान्तरेण ज्ञेन्दुशुक्राणांवारे वा दम्पतयोश्चन्द्रतारा शुद्धौ सत्यां पुंसवनसीमान्तसंस्कारौ भवतः।। |
| सद्भानि | मृ. पुष्य मूल श्रवण पुन. हस्त रेवती रो. उ३. एतद्भेषु पुंजन्मभं विना सीमन्तोन्नयनं पुंसवनं च प्रशस्तम् ।। |
| सत्तिथयः | १।२।३।५।७।१०।११।१३ एतासु तिथिसु सिते। तिथि १० यावत् कृष्णे चोत्तमः परन्तु पूर्वाह्ने एवं कार्यः नापराह्ने।। |
| साङ्गलग्न | संस्कारद्वयं पुंभस्याङ्के पुभांसे च श्रेष्ठं। तत्र लग्नात् १।४।५।७।९।१० |
| शुद्धिः | एषु शुभैः ३।६।११ एषु पापैश्चोत्तमः। चन्द्रे १।६।८।१२ वर्जिते श्रेष्ठः।५।८।१२ पाप एकोप्यसत् ।। |

### अथसूतिकायाः सूतीगृहप्रवेशमुहूर्त्तस्य विचारः

रो. मृ. पुष्य. स्वा. श. पुन. ह. ध. अनु. चि. अश्वि. उ३. श्र. एषु भेषु। शुभवासरे।। सत्तिथौ रिक्ता षष्ठ्यष्टमीवर्जिते। शुभाङ्के।। लग्नतः केन्द्रेषु शुभेषु। ३।६।११ पापेषु। शुभांशे सत्युत्तमः। श्रुत्वा जातं पितापुत्रं सचैलं स्नानमाचरेत् ।। एतच्च रात्रावपि कर्त्तव्यम् ।। श्राद्धादिकं हेम्ना कर्त्तव्यम् तत्कालाभावे सूतकान्तेऽपि कर्त्तव्यम् ।

### तत्कालातिक्रमणे जातकर्मणि विचारः

| | |
|---|---|
| सत्तिथयः | १।२।३।५।६।७।१०।११।१३ एतासु तिथिसु व्यतिपातभद्रासंक्रान्ति दोपरहितासु श्रेष्ठम् । |
| सद्वाराः | चन्द्रबुधगुरुशुक्राणां वारे। जन्माहात् प्रथम एकादशद्वादशदिने चोत्तमः। |
| सद्भानि | मृ. रे. चि. अनु. उ३. रोहि. पुन. स्वा. ध. श्र. श. पुष्य, हस्त. अश्वि. एषु सततौ चायं श्रेष्ठः।। |

### स्तनपानमुहूर्त्तस्य विचारः

उ३. रो. अश्वि. रे. पुष्य. पुन. अनु. ह. चि. मृ. ध. श्र. श. ऐषु भेषु। शुभवासरे।। शुभतिथौ। स्थिरांगे स्तनपानं प्रशस्तं स्यादिति।। अथ सूतिकापथ्यम्।। अन्नप्राशनोक्तभे तिथौ च दुर्योगादिरहिते श्रेष्ठम् ।।

### बालस्यादौ दुग्धपानसमयश्च

| | | |
|---|---|---|
| ई.४ | पू.१ | आ.६ |
| उ.७ | चरयोगिनी | ३द. |
| २वा. | ५प. | ८नै. |

एकविंशद्दिने चैव पयः शंखेन पाययेत्। अन्नप्राशननक्षत्रादिवसोदयराशिषु। इन्द्रवायुयमशूल पाणिनां बर्हिपाश्रवण रक्षसा क्रमात्। अर्द्धया ममनुवास रोहितोदिक्षु संभ्रमति योगिनीचरा।

### अथ प्रथमादिमासेषु बालकानां दन्तजननफलबोधक चक्रम्

| मासाः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| फलानि | स्वयंनाशः | कनिष्ठः भ्रातृनाशः | भगिनिनाशः | मातृनाशः | ज्येष्ठः भ्रातृनाशः | सभागम | तातात्सुखम् | पुष्टता | लक्ष्मीप्राप्ति | सौख्य | सौख्य | धनसम्पत्ति |

अथ जनौसदनो बोध्वंस्वपित्रादिहा। तदर्थशान्ति विधेया।।इति।।

**अथ नामकरणमुहूर्त्तस्य विचारः।** सूतकान्ते नामकरणं कर्तव्यं स्वकुलोचितं बृहस्पतिः। द्वादशे दिवसे वापि जन्मतोदिवसे शुभे। षोडशे विंशतिश्चैव द्वाविंशे वर्णतः क्रमात्।

| | |
|---|---|
| भानि | मृ.रे.चि.अनु.उ३.रो.ह.पुन.पुष्य,अश्वि.अभि.स्वा.श्र.,ध.श. नक्षत्रेषु। |
| वाराः | चं. बु. बृ. श. एषां वारे नामकर्म हितम् । |
| तिथयः | १।२।३।५।७।११।१२।१३ तिथौ भद्रादिरहिते सत्युत्तमः। |
| शुद्धलग्न | २।५।८।११ एतद्रस्याङ्केऽष्टमशुद्धौशुभेलग्नेशुभांशेचोत्तमः। |
| लग्न शुद्धिश्च | लग्नात् १।४।५।७।९।१० शुभलग्नात् ३।६।११ पापैश्चोत्तमः। लग्नात् ६।८।१२ सर्वे न शुभः। चन्द्रताराबले मितृपुत्रयोः। दिवापूर्वाह्ने एवं कर्त्तव्यः। मध्याह्ने मध्यमं तदग्रे न सत् ।। |

दिवापूर्वाह्ने एवं कर्त्तव्यः। मध्याह्ने मध्यमं तदग्रे न सत्।। व्यतिपात संक्रान्त्यमावैधृतिग्रहणाहश्राद्धाहपक्षच्छिद्ररिक्तापूर्णा शकुनीकिंस्तुघ्नाविष्टि-करणादीन्वर्जयित्वोक्ततिथ्यादिनामकर्मविहितम्। अथ विहितकालातिक्रमे सतीदं गुरुशुक्रयोरस्तादिदोपरहिते सौम्यायने कार्यम्। नान्यथेति।।

### अथान्नप्राशनमुहूर्त्तज्ञानाय चक्रमिदम्

तत्र बालकानां षष्टमासादारभ्य सममासेषु। कन्यकानां पञ्चममासादारभ्य विषममासेषुकार्यम् । मासगणनासौरणान्नाशनं परिमितिज्ञेया।

| | |
|---|---|
| सद्भानि | रो. उ३. मृ. रे. चि. अनु. ह. पुष्य, अश्वि. अभि. पुन.श्र. ध. स्वा. श. एषु भेषु शुभ। अथसप्तशलाकाविद्ध ग्रहणभं त्याज्यम् । |
| तिथयः | २।३।५।७।१०।१३।१५ सत् । अन्येषु समः। |
| वाराः | चं. बु. बृ. शु. एषां वारः श्रेष्ठः। |
| लग्नादि | नान्यस्मिन्नाह्निं सल्लग्नानि २।३।४।५।६।७।१०।११ एषु जन्माङ्गभयो-र्मृत्युभस्याङ्ग तदंशकञ्च हित्वा प्रशस्तम् नान्यलग्ने। |

**अथ जलपूजनमुहूर्त्त विचारः।।** तत्र सूतिकाया मासपूर्ती सत्यां शुक्रेज्योरस्ते चैत्रपौषयोर्मासे तथाधिमासे जलं न पूज्येत्। श्र. पुष्य, पुन. मृ. ह. मू. भ. अनु. एषु भेषु विरिक्ते तिथौ। चं. बु. गु. एषां वारे शुभम्।

**अथ कर्णवेधमुहूर्त्तज्ञानायचक्रमिदम्।** तत्र जन्माहात १२।१६ दिने ततः ६।७।८ मासि। ततः विषमवर्षे कर्णवेधः शुभः। चैत्रपौषावमाजन्ममास चातुर्मास्यरिक्ता अमामवसर्पजन्मतारां हित्वां प्रशस्तः कर्णवेध इति।

| | |
|---|---|
| सत्तिथयः | १।२।३।५।७।१०।१२।१३।१५ एततिथौ सिते। कृष्णे च ति.१० यावत शुभः। |
| वाराः | चं. बु. बृ. शु. एषां वारे भद्रादिरहिते सत्युत्तमः। |
| सद्भानि | पुन.अश्वि.हस्त, पुष्य,अभि.मृग.चित्रा, अनु.रेव.श्र.ध. एतत्भेषु चन्द्रबले सति प्रशस्तः। |
| शु.लग्न | २।३।४।६।७।९।१२ एतद्रस्य लग्नेष्वंशेषु च सत् ।। |
| ल.शुद्धि | लग्नादष्टभवने संशुद्धे लग्नात् १।३।४।५।७।९।१०।११ एषुशुभेः तथा ३।६।११ एषु पापैश्चोत्तमः। लग्नस्थेगुरौ कर्णवेधः शुभावहः।। |

**अथ चौलमुहूर्त्तस्य बोधकार्थमिदं चक्रम्।** तत्र वर्षत्रयाद्विषमवर्षे जन्मतः विचैत्रोदगयने भानौ चोत्तमम् मनुना प्रथमवर्षेऽपि सदुक्तं चौलम् ।।

| | |
|---|---|
| सद्भानि | ज्ये. मृग. रे. चित्रा. हस्त, अश्वि. पुष्य, अभि. स्वाती, पुन. श्रवण, धनि. शत. एषु चन्द्रतारानुकूले सति शुभः।। |
| वाराः | चं. बु. गु. शु. एतद्वारेषु भद्रादिदोषरहिते श्रेष्ठम् ।। |
| सत्तिथयः | २।३।५।७।११।१३ एततिथौ सिते। परन्तु पूर्वाह्ने।। |
| शु.लग्न | २।३।४।६।७।९।१२ एतद्रस्य लग्नांशे श्रेष्ठोऽयम् ।। |

### अथाक्षरारम्भमुहूर्त्तस्य विचारः

सत्रोत्तरायणे रवौ। पञ्चमेऽब्दे गणेशविष्णुसरस्वतीलक्ष्मी कुलदेवान्नत्वा सविधि सम्पूज्य च शिशोर्नूतनाक्षरलेखनारंभः कार्यः।

| | |
|---|---|
| तिथयः | २।३।५।६।१०।११।१२ तिथिषुदुर्योगादिरहितासु शुभः।। |
| वाराः | चं. बु. बृ. शु. एषां वारेषु शुक्लपक्षेचाक्षरारम्भ शुभः।। |
| भानि | अश्वि. आर्द्रा, पुन. पु. ह. चि. स्वा. अनु. श्र. रे. एषुभेषु शुभः।। |
| सां.ल.शु | २।३।६।९।१२ एतद्रस्याङ्के तदंशे चोत्तमः। अत्राष्टमशुद्धे कुम्भांशकंविनोत्तमः। खेस्थे जीवे बुधे शुक्रेलग्ने खेटबलाढ्ये श्रेष्ठोऽयम्।। |

### अथविद्यारम्भमुहूर्त्तस्य विचारः

तत्रादौ अक्षरग्रहणे दृढे संजाते सौम्यायनेरवौ आश्विने कन्यार्के बुधप्रावल्ये

| | |
|---|---|
| सद्वाराः | बु.सू.बृ.शु. एतद्वारेषु शुभः। गणेशवाग्देवतासभ्यर्च्य कार्यः।। |
| सद्भानि | अश्वि. पु. आ. अनु. मृ. पुन. ह. चि. स्व. श्र.,ध. मू. पू३. श्ले. शत. |
| सत्तिथयः | २।३।५।६।१०।१२ एषुसिते। ति. ५ यावत्कृष्णेचोत्तमः एषुसत्। |
| सांशलग्न | २।३।६।९।१२ एतद्रस्याङ्केशुभः। लग्नादष्टमे सर्वग्रहाःनेष्टाः। लग्नात् |
| शुद्धिः | १।२।३।४।५।७।९।१०।११ एषु शुभैः। ३।६।११ एषु पापैश्चोत्तमा अधीतिः।।इति।। |

### अथ व्रतबन्धमुहूर्त्तबोधचक्रमिदम्

तत्रगुरुशुक्रयोर्बृद्धत्वास्तशिशुत्वकालंविनोत्तरायणेरवौ माघादि ५ मासेषु शुभः। परन्त्वर्कन्दुगुरुशुद्धिवशेन। चैत्रेसति मीनार्केब्राह्मणानां व्रतं सत् ।।

| | |
|---|---|
| सद्भानि | अश्वि. ह. पुष्य, उ३.रो. श्ले. स्वा. पुन. श्रव. ध. श. मू. चि. मृ. अनु. पूर्वा३. रेव. आर्द्रा, एतद्भेषरहितेषु सत्। परन्तुनापराह्ने।। |
| तिथयः | २।३।५।१०।११।१२ एतासुशुक्ले २।३।५ कृष्णेतिथिषु चोत्तमः।। |
| सद्वाराः | सू. चं. बु. बृ. शु. एषावारे भद्राऽरूग्वाणादिदोषरहिते सत्युत्तमः।। |
| लग्नशुद्धि | त्रिषडस्थाःखलाः सर्वेचन्द्रोद्विद्यूनदिकत्रिगः। सौम्याः केन्द्रत्रिकोणस्था |
| ज्ञानमाह | लाभेसर्वव्रतेशुभाः।१। चं. शु. बृ. लग्नेशाः लग्नात् ६।८ न शुभाः। चन्द्रशुक्रो लग्नात् १२ निद्यौ। १।५।८ पापाः न शुभाः। ६।८।१२ सौम्यान शुभाः ३।६।११ पापाः शुभदाः। पूर्णेन्दु वृष कर्क गतोलग्ने श्रेष्ठोऽन्यथान। लग्नेऽर्कःशुभः। चन्द्रांशविनेति।। |

### अथ दीक्षाग्रहणमुहूर्त्तस्य बोधकचक्रमिदम्

| | |
|---|---|
| मासाः | चै.वै.श्रा.आश्वि.का. मार्ग. माघ, फा. एतन्मासेषुशुभग्नाधिमासे।। |
| भानि | अश्वि.रो.उ३.रे.अनु.पुष्य, स्वा.पुन.मृ.श्र.ध.श.पू३.चि. एषु सत्।। |
| वाराः | सू. चं. बु. बृ. शु. एषामह्नि भद्रादिदोषवर्जिते सति प्रशस्तम्।। |
| तिथयः | २।३।५।७।१०।११।१२ एतासुतिथिषुश्रेष्ठः कृष्णेयावत्पंचमींसत्। |
| शु.लग्न | २।३।४।५।६।७।९।१२ एतद्रस्याङ्केषुचन्द्रतारानुकूलेसति शुभम्।। |
| अङ्ग | लग्नात् ३।६।११ एषु पापैः १।४।५।७।९।१० एषु शुभैश्चोत्तमः।। |
| शुतिश्च | अष्टम्यां संक्रान्तौ रविचन्द्रोपरागे चोत्तमः। गुरुशुक्रोरुदयेश्रेष्ठः।। |

अथ द्वादशस्यचन्द्रफलम्। पाणिग्रहेस्त्रीसुरतेभिषेकेयात्राव्रतबन्धने च।। व्रतोपवासादिषु गर्गपूर्वैःप्रोक्तः शुभोद्वादशगोहिमांशुः।। इति।।

**अथ प्रतिमा-भङ्गादि-शान्तिः-** प्रतिमाशिवलिङ्गप्रासाद कलशादिभङ्ग स्वामिनो मरणं भवेत्। तत्र शान्तिः।। "कुण्डं कृत्वा विधानेन ततो होमं समाचरेत्। चरुं च यमदैवत्यं साधयित्वा विधानतः।। दधिक्षौद्र घृताक्तानामश्वत्थ समिधां ततः। जुहुयादष्टशतं प्राज्ञ इमारुद्रेति मंत्रवित्।। माषैर्मुद्गैस्तिलैश्चैव घृतेन मधुनापि च। एभिः पञ्चसहस्राणि शक्तिबीजेन होमयेत्।।" शक्तिबीजं ह्रीं बीजम्। "भूमिधेनुमनड्वाहं स्वर्णं धान्यं सदक्षिणम्। दत्त्वाथ पञ्चगव्येन स्नायाद्देवालये द्विजः।।बलिं दद्याद्यमायाथ कृसरैः पायसैस्तथा। ईशानाय बलिं दत्त्वा कृतकृत्यो भवेन्नरः।"

### अन्य मुहूर्त्तविचारः।

**क्रयविक्रय मुहूर्त्तः।** पुष्यं भाद्रपदायुग्मं मैत्रं श्रवणमश्विनी। हस्तोत्तरा मृगः स्वाती तथा श्लेषा च रेवती।। ग्राह्याणि भानि चैतानि क्रयविक्रयणे बुधैः। चन्द्रभार्गवजीवाश्च वाराः शकुनमुत्तमम् ।।

ऋणप्रादाने ग्रहणे च वर्ज्यम्। ऋणं भौमे न गृह्णीयान्न देयंबुधवासरे। ऋणंच्छेदं कुजे कुर्यात्संचयं सोमनन्दने।। हस्तेऽर्कवारे संक्रान्तौ यदृणं स्यात्कुलेषु तत् । वृद्धियोगे तथा ज्ञेयमृणच्छेदं तु कारयेत् ।।

**सेवाकर्म (नौकरी) मुहूर्त्तः।** हस्तेन्द्रयेऽनुराधायां रेवतीयुगले मृगे। पुष्ये बुधे गुरौ शुक्रे सत्तिथौ रविवासरे। योनिराशिपयोर्मैत्र्यां स्वामी सेव्योऽनुजीविभिः।

**इक्षुयन्त्र (गन्नामिल) मुहूर्त्तः।** वेद द्वि नेत्र भू भूत बाण हस्त रसाः क्रमात्। प्रथमे च भवेल्लक्ष्मीर्द्वितिये हानिरेव च।। तृतीये सर्वलाभश्च चतुर्थे च क्षयस्तदा। पञ्चमे च भवेन्मृत्युः षष्ठस्थाने शुभं स्मृतम् ।। सप्तमे चैव पीड़ा स्यादष्टमे धनधान्यकम् । सूर्यभाद्गणयेच्चान्द्रमिक्षुयन्त्रं योजयेत् ।।

**तैलिकयन्त्र (तेलमिल) मुहूर्त्तः।** आद्यांत्यपाणिद्वयमैत्रयुग्मे सवासवादित्यभधैषणेस्यात् । सदह्नि रिक्ताशुभयोगमुक्ते तत्सिद्धये तैलिकयंत्रकर्म।

**संगीत-नृत्यारंभ मुहूर्त्तः।** मैत्राकांत्यवसूत्तरेज्यवरुणः सेंद्रैः शुभं नर्तनं। लग्नेज्ञे गुरुवीक्षिते हिबुकगैः सौम्यैश्च संगीतकम् ।

**राज्याभिषेक मुहूर्त्तः।** (व्यहवारोच्चय)। जन्मांगर्क्षदशेशसद् ग्रहकुजैः सार्कैर्बलिष्ठैर्मृदुक्षिप्रेंदु ध्रुवभैः स्थिरर्द्धिनृतनौ व्याराह्नि भूपस्थितिः।।

**दत्तकपुत्र-पुत्री मुहूर्त्तः।** हस्तादिपञ्चकभिषवसुपुष्यभेषु सूर्यक्षमाज-गुरुभार्गववासरेषु। रिक्ताविवर्जिततिथिष्वलिकुम्भलग्ने सिंहेवृषे भवति दत्तसुतग्रहोऽयम् ।

**पुत्रप्राप्त्यर्थ शुभनक्षत्राणि।** षोडशर्तुनिशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् । युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु।। पुष्ये धनिष्ठामृदुवायुमूले स्थिराश्विनीविश्वमघासु हस्ते। एभिः प्रविष्टा बहुपुत्रपौत्रा वसेच्चिरं भूरिगृणेरुपेता।।

**नवचण्डी-शतचण्डी सहस्रचण्ड्यादि देव्याराधन मुहूर्त्तः विचारः।** तत्रादौमास विचारः। वैशाखः फाल्गुनामाघः श्रावणो मार्गं एवं च। आश्विनः कार्त्तिको मासाः पूजायां तु शुभावहाः। तिथिविचारः। तृतीयापंचमी-पूर्णासप्तमीचत्रयोदशीदशमी द्वादशीषष्ठीचतुर्थीनवमी तथा। कृष्णाष्टमीचतुर्दश्यौ तिथयः सर्वकामदाः। वारविचारः। रविर्बृहस्पतिसोमाबुधशुक्रौ शुभावहाः। देवीपूजननक्षत्रविचारः। अश्विनी रोहिणीस्वाती पौष्णज्येष्ठोत्तरात्रयम्। पुष्यं पुनर्वसुर्भानि श्रेष्ठानि शक्ति पूजने। होमाहुतिविचारः। सूर्यभात्त्रित्रिभे चान्द्रे सूर्यविच्छुक्रपंगवः। चन्द्रारेज्यागुशिखिनो नेष्टा होमाहुतिः खले।। आहुतिदोष परिहार विवाहयाग व्रतबंध दीक्षा सीमंतचण्डी गृहवास्तुशांतौ। आदित्यसौरीकुजराहु केतवो न दोषदा यज्ञविधायिनां खलु। दुर्गाहोमे आहुतिचक्र विचारः। ब्राह्मी च कौमारी च वैष्णवी च वाराहिऐंद्री त्वथ चंडिका च। मेघा च माहेश्वरीनारसिंही क्रमेण सूर्यादिनभं त्रिकं च। श्रीपुत्रदा शोक भयौ धनाप्तिर्ह्रातस्तथा राजपदाप्तिरोगौ। विद्यासुखाप्तिर्नृपतेश्च लाभः फलानि दुर्गा हवने क्रमेण।

### दुर्गाहोमे आहुतिचक्रम्

| ब्रा. | कौ. | वै. | वा. | ऐ. | चं. | मे. | मा. | ना. |
|---|---|---|---|---|---|---|---|---|
| ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ |
| ३ | ६ | ९ | १२ | १५ | १८ | २१ | २४ | २७ |
| श्रे. | ने. | ने. | श्रे. | श्रे. | ने. | श्रे. | श्रे. | श्रे. |
| धन पुत्र | शोक | भय | धन | राज्य सुख | रोग | विद्या | सुख | राज सम्मा. |

**अथखट्वारोहणमुहूर्त्तस्यविचारः** जन्माहात् १०।१२।१६।२२ एषु दिवसेषु।। मृ. रे. चि. अनु. उ३. रो. ह. अश्वि. पुष्य. अभि. एषु भेषु। शुभाह्ने। रिक्तामारहिततिथौ प्राक्शीर्षं बालकं तत्र विन्यसेत्।

**अथसूतिकाक्वाथौषधिभक्षणमुहूर्त्तज्ञानम्।** ह. अश्वि. पुष्य. अभि. मृ. अनु. रे. चि. स्वा. पुन. श्र. ध. श. मू. भानि। ३।६।९।१२ लग्ने। सू. चं. बृ. शु. वाराः।। लग्नात् ७।८।१२ शुद्धेषु। रिक्ताऽमा रहिते तिथौ। पुंलग्नं पूर्णेन्दुयुते श्रेष्ठः। जन्मराशौ न रसभक्षणम्।

**सूतिस्नानमुहूर्त्तस्य विचारः।।** रे. उ३. रो. हस्त. स्वा. अश्वि. अनु. एषु भेषु रवि, भौम, गुरु, दिवसेषु। १।२।३।५।७।१०।१३।१५ तिथिषु सत्।। आर्द्रा. पुन. पु. श्र. म. भ. वि. कृ. मू. चि. एषु भेषु बुधशनिवारयोः ४।६।८।९।१२।१४ तिथिषु न सत् एतद्भिन्नतिथिनक्षत्रवारेषु मध्यमम्।

**अथभूम्युपवेशनमुहूर्त्त विचारः।।** अत्रादौ पृथ्वीवराहाभिपूज्य भौमबले पञ्चमेमासि. कार्यम्। उ३. रो. मृ. ज्ये. अनु. अश्वि. ह. पुष्य. अभि. एतद्भेषु। रिक्तामारहिततिथौ। स्थिरभस्याङ्के। शुभवासरे च।। बालकस्य कटिस्थले कटिसूत्रं बध्वा पृथिव्यामुपवेशयेत्। तत्र मंत्राः। रक्षैनं वसुधे देवि सदा सर्वगतंशुभ। आयुः प्रमाणं सकलं निक्षिपस्व हरिप्रियेति। अथात्रैव बालाग्रे इमानि स्थापयेत्। वस्त्रं। शस्त्रं। पुस्तकं। लेखनी। स्वर्णं। रौप्यं। एषु यद्बालो गृहणाति तैराजीविनो वृत्तिः प्रतिष्ठा च भवेत्।।

**अथ निष्क्रमणमुहूर्त्तज्ञानम्।** जन्मतश्चतुर्थे मासे यात्रोक्तसमयेऽर्कमितेह्नि वा सत्।

**विवाहे मण्डप निर्माणे परिहारः।** धनिष्ठान्ते शतभिषादौ पूर्वादो चोत्तरान्तिमे। पञ्च पञ्च घटी हेया रेवतीं सकलं त्यजेत्।।

**देवप्रतिष्ठामास विचारः प्रतिष्ठामासविचारः।** चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवेऽपि वा। माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत्। **प्रतिष्ठानक्षत्राणि।** हस्तत्रये मित्रहरित्रये च पौष्णद्वयादित्यसुरेज्यभेषु। स्यादुत्तराधातृ शशांकभेषु सर्वमस्थापनमुत्तमं च।। **प्रतिष्ठायां तिथिविचारः।** यद्दिनं यस्य देवस्य तद्दिने तस्य संस्थितिः। द्वितीयादिद्वयोः पंचम्यादितस्तिसृषु क्रमात्। दशम्यादि चतसृषु पौर्णमास्यां विशेषतः।। प्रतिष्ठायां पक्षविचारः। प्राप्य पक्षं शुभं शुक्लमतीते दक्षिणायने। प्रतिष्ठायां वारविचारः। सोमो बृहस्पतिश्चैव शुक्रश्चैव तथा बुधः। एते वाराः शुभा प्रोक्ताः

| सयभातशिखर-स्थापनचक्रम् | | |
|---|---|---|
| १ | १ | १ |
| न. | श्रं. | श्रं. |

प्रतिष्ठायाज्ञानकर्माणि। देवस्थापने लग्नम्। स्थाप्यो हरिर्दिनकरो मिथुने महेशो। नारायणश्च युवतौ घटके विधाता। देव्यो द्विमूर्त्तभवनेषु निवेशनीयाः। क्षुद्राश्चरे स्थिरगृहे निखिलाश्च देवाः।।

श्री संवत् २०७९ शाके १९४४ चैत्रशुक्ल ति. १३ गुरौ १२।५४ ( दि.१०।५३ ) इष्टे मिथुन लग्नोदये जगल्लग्न प्रवेशः।

**जगल्लग्नफलविचारः-** लग्ने बलाढ्ये निजनाथ- सौम्यैर्युतेक्षिते केन्द्रगतैः शुभैश्च। सर्वसमर्घं विवले विलग्ने केन्द्रेषु पापैः सकलं महर्घम्। भानोमेषप्रवेशोदये-भवनपतिः सद् ग्रहः स्वोच्चसंस्था। स्वर्क्षस्थोवाऽपिकेन्द्रे शुभगगन-चरैर्दृष्टयुक्तोबलाढ्यः। तस्मिन्वर्षे विदद्ध्याज्जगतिशुभ सुखंभूरि स्वास्थ्यंसुवृष्टिः। क्रूरेक्रूरार्दिते-र्वादिशति तनुभयं कष्टमत्र महर्घम्। राकाकुहूशशिनिभास्वदज प्रवेश-लग्नेश्वराः शुभखगैर्युतवीक्षिताश्चेत्। तद्वत्सरे जगति सौख्यमलंप्रकुर्युः पापार्दिते गदनरेन्द्रभयं प्रजानाम्।३। मेषप्रवेशोदयतः खरांशो केन्द्रे च पापोडुपतीत्थशाले। पापग्रहै-र्दृष्टयुतेचत स्मिन्वर्षे गदार्तिः सदमत्र मुर्व्याम्।४। जन्मलग्नाद वर्षलग्ना-ज्जगल्लगनं यदा भवेत्। अष्टमं द्वादशं वाऽपि स वर्षो न शुभावहः।५। जन्मोद याद्धा-स्वदजप्रवेश लग्नं हि युद्धा वगतं बलान्वितः। तद्भाववृद्धिम्प्रकरोति तस्मिन्वर्षे नृणांपापयुते तदन्यथा।६। जन्मोदये देहसुखं धनेऽर्थला-भस्तृतीये च कुटुम्ब वृद्धिः। तुर्ये सुहृत्सौख्यमथात्मजाप्तिः पुत्रे च षष्टेऽरिपराजयश्च।७। स्त्री सौख्या-प्तिर्भवति मदने मृत्यु रुग्भीश्च रन्ध्रे धर्मार्थाप्तिस्तपसि दशमे वित्त-सौख्यात्मजाप्तिः। लाभेलाभः सुख धनचयो दुःख दारिद्र्य मन्त्ये। पुंसामेषप्रविशति रवौ जन्म-लग्नाद्विलग्ने।।इति।।

### दत्तक (पुत्र-पुत्री) ग्रहणमुहूर्त्तः

ह.चि.स्वा.वि.अनु.अश्वि.धनि. पुष्य नक्षत्रेषु, सू.मं.बृ.शु. वारेषु रिक्ता रहित तिथिषु ८।११।४।२ लग्नेषु च दत्तक पुत्र-पुत्री ग्रहणं शुभो भवति।

